❖श्री श्रीगौरगदाधरौ जयतः❖

# श्रीराधाकृष्णार्च्चनदीपिका

श्रीमज्जीवगोस्वामिविरचिता



श्रीवृन्दावनधामवास्तव्येन

न्याय–वैशेषिकशास्त्रिन्यायाचार्यकाव्यव्याकरणसांख्य

मीमांसावेदान्ततर्कतर्कतर्कवैष्णवदर्शनतीर्थ

विद्यारत्नाद्युपाध्यलङ्कृतेन

*श्रीहरिदासशास्त्रिणा सम्पादिता।*

❖श्रीश्रीगौरगदाधरौ जयतः❖

# श्रीराधाकृष्णार्च्चनदीपिका

## श्रीमज्जीवगोस्वामिविरचिता


श्रीवृन्दावनधामवास्तव्येन

न्याय–वैशेषिकशास्त्रिन्यायाचार्यकाव्यव्याकरणसांख्य

मीमांसावेदान्ततर्कतर्कतर्कवैष्णवदर्शनतीर्थ

विद्यारत्नाद्युपाध्यलङ्कृतेन

श्रीहरिदासशास्त्रिणा सम्पादिता ।



सद्ग्रन्थप्रकाशक –

**श्रीहरिदासशास्त्री**

श्रीगदाधरगौरहरि प्रेस, श्रीहरिदासनिवास,

कालीदह, वृन्दाबन, जिला–मथुरा । उत्तर प्रदेश

❖ श्रीश्रीगौरगदाधरौ विजयेताम् ❖

# विज्ञप्तिः

श्रीश्रीगौरसुन्दर की करुणा से तदीय परिकर श्रीमज्जीवगोस्वामि प्रणीत "श्रीराधाकृष्णार्चन" दीपिका नामक ग्रन्थ का चतुर्थ संस्करण प्रकाशित हुआ।

ग्रन्थ प्रणयन की आवश्यकता ग्रन्थकार कृत प्रारम्भिकलेख में ही सुस्पष्ट है, "अथ यत् खलु श्रीराधा सम्बलित:श्रीकृष्ण उपास्यते तत्र कश्चित् शास्त्र प्रमाणकत्वं न मन्यते, तं प्रतीदं ब्रूम:" कतिपय व्यक्ति श्रीराधासम्वलित श्रीकृष्ण उपासना को शास्त्रीय प्रमाण रहित मानते हैं, उनके लिए शास्त्र प्रमाण उपस्थापित करते हैं।

"लक्ष्मीरभित: स्त्रितमा, गोप्यो लक्ष्मीतमा: प्रथिता:
राधा गोपीतमा चेदस्या: का वा समा रामा इति"।।

आस्तां तावत् लक्ष्मीविजेतृ गुणगण गोपीगण प्रधानतया श्रीकृष्ण सन्दर्भादौ निर्णीतां अत्र च निर्णेष्यमाणा स्वयं भगवत: श्रीकृष्णस्य स्वयं लक्ष्मीरूपा श्रीराधा गोपीजनमात्रसम्बलित: स उपास्यत' इत्यत्र शास्त्राणि श्रृणु। तत्रारोह भूमिका क्रमेण दर्श्यन्ते'

आराधनं हि कृष्णस्य भवेदावश्यकं यथा
तथा तदीय भक्तानां नो चेद्दोषोऽस्ति दुस्तर:"

चतुर्दश भुवनस्थ सकल रमणी से लक्ष्मी श्रेष्ठा हैं, किन्तु गोपीगण लक्ष्मीतमा हैं, अर्थाद् वैकुण्ठ विलासिनी लक्ष्मी से भी श्रेष्ठतरा गोपीगण है, और श्रीराधा गोपीतमा हैं। अर्थात् समस्त गोपियों में बरिष्ठा है, अतएव उनके समान और कोई भी रमणी क्या है ?

लक्ष्मी विजयि गुणगण विशिष्ट गोपीगण हैं, एवं गोपीगणों के मध्य में भी सर्व प्रधाना श्रीराधा हैं। इस तत्त्व का निरूपण श्रीकृष्ण सन्दर्भ प्रभृति में हुआ है।

इस ग्रन्थ में भी स्वयं भगवान् श्रीकृष्ण की साक्षात् लक्ष्मी रूपा श्रीराधा ही निरूपित होगी। हम सब गोपीजन सम्बलित श्रीकृष्ण की उपासना करते हैं, उस विषय में शास्त्र प्रमाण श्रवण करो। उच्च, उच्चतर सोपानारोहण क्रम से ही प्रस्ताव आरम्भ कर रहा हूँ। श्रीकृष्ण की आराधना की आवश्यकता जिस प्रकार स्वीकृत है, तद्रूप भक्त गणों की आराधना की प्रयोजनीयता भी स्वीकृत है, अन्यथा दुर्ल्लङ्घ्य दोष होता है।

**प्रथमत:**— श्रीरूप गोस्वामि रचित श्रीलघुभागवतामृतस्थ भक्तामृत प्रकरण को अवलम्बन कर आरोह भूमिका क्रमसे श्रीगोपीगण सम्बलित श्रीकृष्णभजन का ही सर्व श्रेष्ठत्त्व प्रतिपादित हुआ है,

**द्वितीयत:**— शक्ति निरूपण, (३) स्वरूपशक्ति विनिर्णय, (४) श्रीतत्त्व की पर्य्यालोचना, (५) महिषीवर्ग का स्वरूप निर्द्धारण, (६) श्रीरुक्मिणी देवी का स्वयं लक्ष्मीत्व स्थापन, (७) व्रज देविओं का स्वरूप प्रदर्शन। (८) श्रीराधा का सर्व श्रेष्ठत्व, (९) श्रीराधा सम्बलित श्रीकृष्णोपासना में महद् भक्त सम्मत शास्त्र प्रमाण, प्रदर्शित है।

गौड़ीय वैष्णवाचार्य्य गण श्रीकृष्णचैतन्य देव की कृपा प्रेरणा से उद्बुद्ध होकर वेदान्त, स्मृति, काव्य, नाटक, अलंकार, छन्द:, व्याकरणादि शास्त्र समूह में महा अभिनव स्वरूप स्थापन किए हैं। विशेषज्ञ गण एक वाक्य से स्वीकार करते हैं कि गौड़ीय वैष्णवाचार्य श्रीरूपसनातनादि की कृति ही सूर्य्यवत् विश्ववासियों की जीवातु है।

*हरिदासशास्त्री*

श्रीश्रीगौरगदाधरो जयतः

# सूचीपत्रम्

श्रीश्रीराधाकृष्णाभ्याम् नमः

# श्रीराधाकृष्णार्च्चनदीपिका

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः।
श्रीवल्लभोऽनुजः सोऽसौ श्रीरूपो जीवसद्गतिः।।१।।
पुराणसंहितातन्त्रमन्त्रश्रुति— समन्वितं ।
गीताभागवतं शास्त्रं जयताद् व्रजधामसु ।।२।।
श्रीदामोदर—राधार्च्चनमर्हति व्रजस्थानां ।
आवश्यकतामश्राव्यनयोरन्नाधिदेव्यं हि ।।३।।

अथ यत् खलु श्रीराधा—सम्बलितः श्रीकृष्ण उपास्यते तत्र कश्चित् शास्त्र--प्रमाणकत्वं न मन्यते, तं प्रतीदं ब्रूमः।

लक्ष्मीरभितः ख्रितमा गोप्यो लक्ष्मीतमा प्रथिताः।
राधा गोपीतमा चेदस्याः का वा समा रामा इति।।४।।

आस्तां तावत् लक्ष्मी--विजेतृ--गुणगण--गोपीगण प्रधानतया श्रीकृष्णसंदर्भादौ निर्णीता। अत्र च निर्णेष्यमाणा स्वयं भगवतः श्रीकृष्णस्य स्वयं लक्ष्मीरूपा श्रीराधा। गोपीजन मात्र--सम्बलितः स उपास्यत इत्यत्र शास्त्राणि श्रृणु। तत्रारोहभूमिकाक्रमेण दर्श्यन्ते।

आराधनं हि कृष्णस्य भवेदावश्यकं यथा।
तथा तदीयभक्तानां नो चेद्दोषोऽस्ति दुस्तरः।।५।।

अत्र श्रीकृष्णस्य यथा गोतमीयतन्त्रे—

असारे घोरसंसारे सारं कृष्णपदार्चनं ।
जन्मासाद्य मनुष्येषु शुद्धे च पितृमातरि ।
यो नार्च्चयति कल्पः सन् तस्मात् पापतरो हि कः।।६।।

महाभारते—

मातृवद् परिरक्षन्तं सृष्टिसंहार—कारकं ।
यो नार्च्चयति देवेशं तं विद्याद् ब्रह्मघातकं ।। ७।।

अथ तदीयानां यथा पाद्मे—

मार्कण्डेयोऽम्बरीषश्च वसुर्व्यासो विभीषण:।
पुण्डरीको बलि: शम्भु: प्रह्लादो विदुरो ध्रुव:॥८॥
दालभ्य: पराशरो भीष्मो नारदाद्याश्च वैष्णवै:।
सेव्यो हरिं निषेव्यामी नो चेद्दोष: परं भवेत्॥९॥

तथा हरिभक्तिसुधोदये (१३।७६)—

अर्च्चयित्वा तु गोविन्दं तदीयान्नार्चयन्ति ये।
न ते विष्णो: प्रसादस्य भाजनं दाम्भिका जना:॥१०॥

पाद्मोत्तरखण्डे—

आराधनानां सर्वेषां विष्णोराराधनं परं।
तस्मात् परतरं देवि! तदीयानां समर्च्चनम्॥११॥
अर्च्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु य:।
न स भागवतो ज्ञेय: केवलं दाम्भिक: स्मृत इति॥१२॥

तत्र पूर्वत्र च तदीय शब्देन तस्य भक्ता एव उच्यन्ते, नत्वन्ये—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एवच।
विष्णुभक्तिपरो दैव आसुर स्तद्विपर्यय:॥१३॥

इति विष्णुधर्माग्निपुराणादिनियमात्। तत् सृष्ट्यादि लीलागतत्वेऽपि तदुदासीनेष्वौदासीन्यस्य योग्यत्वं। तद्द्वेष्टृषु तद्द्वेषस्यैवेति च। तथैवदर्शितं सप्तमेराजसूयारम्भे (१।१०–२०) श्रीयुधिष्ठिरादिभि: शिशुपालं प्रति गालिप्रदानादिना। अत: श्रीभगवताप्युक्तं—'प्रवृतिञ्च निवृतिञ्च (गीता १६) इत्यारभ्य।

''तानहं द्विषत: क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥१४॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्॥१५॥

इत्यन्तेन। {गीता १६।१९–२०}

तथा– 'अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्।।१६।।
मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतस:।
राक्षसी मासुरीञ्चैव प्रकृतिं मोहिनीं श्रिता:।।१७।।''

(गीता ९।११–१२)

इत्येनेन स्वभक्ता: स्तुता:।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिता:।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं।। १८।।
सततं कीर्त्तयन्तो मां यजन्तश्च दृढव्रता:।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते।। १९।।

(गीता ९।१३।१४)

अतएवैकादशे–मद्भक्तपूजाभ्यधिका !

मम पूजातोऽप्यभि सर्व्वतोभावेनाधिका अधिकंमत्प्रीतिं करोतीत्यर्थ:।

तस्मान्मद्भक्तपूजावश्यकी चान्तरङ्गा चेति स्थिते–

तेषामपि सर्व्वेषां प्रह्लाद: प्रवरो मत: ।
सर्व्वेषु हरिभक्तेषु प्रह्लादो हि महत्तम:।।२०।।

सप्तमे.(९।२६) प्रह्लादस्यैव हि वाक्यं–

क्वाहं रज: प्रभव ईश तमोऽधिकेऽस्मिन् जात: सुरेतरकुले क्व तवानुकम्पा।
न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पित: शिरसि पद्मकर: प्रसाद:।।२१।।

तत्रैव (७।१०।२१) श्रीनृसिंहवाक्यं–

भवन्ति पुरुषा लोके मद्भक्ता स्त्वामनुव्रता:।
भवान् मे खलु भक्तानां सर्व्वेषां प्रतिरूपधृक्।। २२।।
सर्व्वत: पाण्डवा: श्रेष्ठा: प्रह्लादादीदृशादपि।
श्रीमद्भागवतं सम्यक् प्रमाणं स्फुटमीक्षते।। २३।

तथा (७।१०।४८–५०) श्रीनारदवाक्यं–

यूयं नृलोके वत भूरिभागा, लोके पुनाना मुनयोऽभियन्ति।
येषां गृहानावसतीति साक्षात् गूढं परं ब्रह्म मनुष्यलिङ्गम्।।२४।।

स वा अयं ब्रह्म महद् विमृग्यकैवल्यनिर्व्वाणसुखानुभूतिः।
प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च।।२५।।
न यस्य साक्षाद् भवपद्मजादिभिः, रूपं धिया वस्तुतयोपवर्णितं।
मौनेन भक्त्योपशेमन पूजितः प्रसीदतामेष स सात्वतांपतिः।।२६।।

व्याख्यातञ्च श्रीस्वामिचरणैः--"अहो !

प्रह्लादस्य भाग्यं येन देवो दृष्टः। वयन्तुमन्दभाग्या इति विषीदन्तं राजानं प्रत्याह--यूयमिति त्रिभिः। पद्यत्रयस्य तात्पर्य्यार्थस्तैरेव लिखितः--न तु प्रह्लादस्य गृहे तु परं ब्रह्म वसति, न च तद्दर्शनार्थं मुनय स्तद् गृहानभियान्ति, न च तस्य मातुलेयादिरूपेण वर्त्तते, न च स्वयमेव प्रसन्नः। अतो यूयमेव ततोऽपि अस्मत्तोऽपि भूरिभागा इति भावः इति

सदातिसन्निकृष्टत्वान्ममताधिक्यतो हरेः।
पाण्डवेभ्योऽपि यदवः केचिच्छ्रेष्ठतमा मताः।।२७।।

तथा श्रीदशमे (८२।२८--३०)--

अहो भोजपते ! यूयं जन्मभाजो नृणामिह।
यत् पश्यताऽसकृत् कृष्णं दुर्द्दर्शमपि योगिनाम्।।२८।।
तद्दर्शन--स्पर्शनानुपथप्रजल्प--
शय्यासनाशनसयौनसपिण्डबन्धः।
येषां गृहे निरयवर्त्मनि वर्त्ततां वः
स्वर्गापवर्गविरमः स्वयमास विष्णुः।।२९।।

तथा (१०।९०।४६)--

शय्यासनाटनालापक्रीड़ा स्नानाशनादिषु।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः।।३०।।
यदुभ्योऽपि वरिष्ठोऽसौ भगवान् श्रीमदुद्धवः।
यादवेन्द्रस्य यो मन्त्री शिष्यो भृत्यः प्रियो महान्।।
आबाल्यादेव गोविन्दे भक्तिरस्य सदोत्तमा।।३१।।

तथा तृतीये (२।२)

यः पञ्चहायनो मात्रा प्रातराशाय याचितः।
तन्नैच्छद् रचयन् यस्य सपर्य्यां बाललीलया।।३२।।

दशमे च (४६।१—२):—

कृष्णीणां प्रवरो मन्त्री कृष्णस्य दयितः सखा।
शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ।।३३।।
तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित्।
गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः।।३४।।

एकादशे च (१६।२४):—त्वन्तु भागवतेष्वहमिति (११।४१): —'त्वं मे त्यः सुहृत् सखेति' च। (१४।१५—'न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान्' ति च ।।

तएव तृतीये (४।३०) स्वयन्तथैवाचरितं—

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणै नार्दितः प्रभुः ।
अतो मद्वयुनं लोके ग्राहयन्निह तिष्ठतु।।३५।।

यद् यस्माद् गुणैः सत्त्वादिभि नार्दितो न पीड़ितः गुणातीतः इत्यर्थः। यतः भुः भक्तिरसास्वादे प्रभविष्णुः।

व्रजदेव्यो वरीयस्य ईदृशादुद्धवादपि।
यदासां प्रेमामाधुर्य्यं स एवोप्यभियाचते।।३६।।

थाहि श्रीदशमे (४७।५७)—

दृष्ट्वैमादिगोपीनां कृष्णावेशात्मविक्लवम्।
उद्धवः परमः प्रीत स्ता नमस्यन्निदं जगौ।।३७।।

नमस्यन्निति वर्तमान—शतृप्रयोगो नमस्कारस्यानवच्छिन्नत्वं बोधयति। इदं क्ष्यमाणं तदेवाह—

ृताः परं तनुभृतो भुवि गोपवध्वो, गोविन्द एव निखिलात्मनि रूढ़भावाः।
ान्छन्ति यद्भवभियो मुनयो वयत्त्व, किं ब्रह्मजन्मभि रनन्त कथा रसस्य।।३८।।
(१०।४७।५८)

भावस्य दुर्लभत्वाद्धि तासां तत्सिद्धये पुनः।
पादरेणूक्षितं येन तृणजन्मापि याच्यते।।३९।।

तथाहि श्रीदशमे (४७।६१) :–

**आसामहो चरणरेणुजुषामहं स्यां, वृन्दावने किमपि गुल्मलतौषधीनां।**
**या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा, भेजुर्मुकुन्दपदवीं श्रुतिभि र्विमृग्याम्।।४०**

श्रुतिभि विमृग्या या मुकुन्द–पदवी तद्‌भजनविशेषस्तां।

**निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्,**
**मुनय उपासते तदरयोऽपि ययुः स्मरणात्।**
**स्त्रिय उरगेन्द्रभोगभुजदण्ड–विषक्तधियो,**
**वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः।।४१।।** इति

अत्र प्रतियुग्मान्तस्थस्यापि शब्दस्य द्वयेन युग्मद्वयं पृथगवगम्यते। ततश्च यद्ब्रह्माख्यतत्त्वं मुनय उपासते तदरयोपि ययुः स्मरणात्। स्त्रियः श्रीव्रजदेव्य अङ्घ्रिसरोजसुधा स्तत्प्रेममयमाधुर्य्याणि ययुः। वयमपि समदृश स्ताभिः समभाव सत्यः समा स्ताभिः तुल्यताः प्राप्ताः व्यूहान्तरेण गोप्यो भूत्वा तवाङ्घ्रिसरोसुध ययिम इत्यर्थः। अत्र बृहद्वामनपुराणे तासां प्रार्थना पूर्व्वकाणि वाक्यानि सन्ति स्त्रीशब्दस्य गोपी वाचकत्वं, तदरयोऽपि ययुः।

स्मरणादित्यनेनासुराणामपि मोक्षदातृत्वेन अन्यतया प्रसिद्धस्य श्रीकृष्णस्यैवालम्बनत्वेन लब्धत्वात्ः तासामेव तस्मिन् केवलेन रागेण भजन–प्रसिद्धेः तदेतदप्यास्तां–श्रीनारायणांगस्थिताया लक्ष्मीतोऽपि तासां परमवैलक्षण्यं तेनैव तादृशनिजभक्ति–हेतुत्वेन दर्शितं।

यथा तत्रैव–(१०।४७।६९)

**'नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः।**
**स्वर्य्योषितांनलिनगन्धरुचां कुतोऽन्याः।।४२।।**

इत्यनेन लक्ष्म्यादिका निरवशेषा एव स्त्रियो नामुभिः सालक्षण्यं प्राप्नुवन्तीति विलक्षणा। तत्राप्युदगादित्येनेन स प्रसादस्तासु रास प्रसंग उदितवानेव नतु जात इति स्वाभाविक प्रेमवत्यः केवलस्य श्रीवृन्दाबन–बिहारिणः पूर्णभगवतः सर्वतो विलक्षणस्य नित्य प्रेयसी रूपा इति। सर्वतो विलक्षणा लक्ष्मीविशेषत्वेन प्राप्ताः। तस्मात्ताभिः सह तस्य पूजनमावश्यकमित्यायातम्। ततः स्थूणानिखनन–न्यायेन तदर्थं तासां स्वरूप निरूप्यते। तत्रादौ श्रीभागवतसंदर्भे 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'' इत्यादिना

श्रीभगवन्तं सुष्ठु निर्धार्य्य तस्य शक्तिद्वयी निरूपिता। मायाख्या स्वरूपभूताख्या च। तत्र--(२।९।३३)

'ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः।।४३।।

इत्यनेन--

'एषा माया भगवतः सृष्टिस्थित्यन्तकारिणी।
त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि।।४४।।

इत्यनेन मायाशक्ति निरूपिता। तत्र तस्या अंशाश्च दर्शिता। अथ ''यन्न स्पृशन्ति न विदुर्मनो बुद्धीन्द्रियासवैः--(६--१६--२०) इत्यादिना, 'त्वमाद्यः पुरुषः साक्षात् ईश्वरः प्रकृतेः परः। मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी''--(१।७।२३) त्यनेन च स्वरूप भूताचिन्त्यशक्ति दर्शिता। तस्या वृत्तिभेदेनान्त्याया:--

'श्रिया पुष्ट्या गिरा कान्त्या कीर्त्त्या तुष्ट्येलयेर्जये त्यादिना कियन्तो भेदाश्च दर्शिताः (१०।३९।५५) सा च शक्तिद्वयी अपरा परानेति श्रीविष्णुपुराणे दर्शिता--

सर्व्वभूतेषु सर्व्वात्मन् या शक्तिरपरा तव।
गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वर।।४५।।
यातीतगोचरा वाचां मनसांचाविशेषणा।
ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरीं परामित्यनेन।।४६।।

तत्र प्रथमा श्रीवैष्णवानां जगद्वदुपेक्षणीया, यन्मयी एव खलु तस्य जगत्ता। द्वितीया तु तेषां श्रीभगवद्वदुपास्या तदीयस्वरूपभूता, यन्मय्येव खलु तस्य भगवत्ता। तत्रैकमेव स्वरूपं शक्तित्वेन शक्तिमत्त्वेन च विराजतीति। यस्य शक्तेः स्वरूपभूतत्वं निरूपितं, चिच्छक्तिमत्ता प्रधानेन विराजमान भगवत्संज्ञमाप्नोतीति तत्रैव दर्शितमेव। तदेवं शक्तित्वप्राधान्येन विराजमानां लक्ष्मीसंज्ञामाप्नोतीति दर्शयितुं प्रकरणमुत्थाप्यते।

तत्र तावदेकस्यैव स्वरूपस्य सत्त्वाच्चित्तादानन्दाच्च स्वरूपभूता शक्तिरप्येका त्रिधा; तदुक्तं श्रीविष्णुपुराणे (१--१२--६९)

ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्व्वसंस्थिते।
ह्लादतापकरी मिश्रा त्वयि नो गुणावर्जिते'' इति।।४७।।

व्याख्यातञ्च श्रीस्वामिभिः—ह्लादिनी आह्लाद—करी सन्धिनी सन्तता सं
विद्याशक्ति एका मुख्या अव्यभिचारिणी स्वरूपभूतेति यावत्। सर्व्वसंस्थिते स
स्थिति र्यस्मात् तस्मिन् सर्वाधिष्ठानभूते त्वय्येव, नतु जीवेषु। जीवेषु च या गुण
त्रिधा सा त्वयि नास्ति तामेवाह ह्लादतापकारी मिश्रेति। ह्लादकरी नाम मनः प्रसा
सात्त्विकी, तापकरी विषयवियोगादिषु तापकरी तामसी, तदुभयमिश्रा विषय
राजसी।

तत्र हेतुः—सत्त्वादिगुणै र्वर्जिते। तदुक्त सर्वज्ञ सूक्तौ—

**ह्लादिन्या सम्विदाश्लिष्टः सच्चिदानन्द ईश्वरः।**
**स्वाविद्या—संवृतो जीवः संक्लेशनिकराकरः।।४८।।**

अत्र क्रमादुत्कर्षेण सन्धिनी सम्वित् ह्लादिन्यो ज्ञेयाः। अत्र च—सद्रू
यया सत्तां दधाति धारयति च सा सर्व्वदेशकाल द्रव्यादिव्याप्तिकरी संधिनी।
सम्विद्रूपोऽपि यया संवेत्ति संवदेयति च सा सम्वित्। तथा ह्लादरूपोऽपि
सम्विदुत्कर्षरूपया तं ह्लादं वेत्ति वेदयति च, सा ह्लादिनीति विवेचनीयम्।
तस्या स्त्र्यात्मकत्वे सिद्धेर्य्येन स्वप्रकाशकतालक्षणेन तद्वृत्तिविशेषेण स्वरू
स्वरूपशक्ति र्वा विशिष्टं वाविर्भवति, तद्विशुद्धसत्त्वं, तच्चान्य—निरपेक्ष स्तत्
इति। ज्ञापनज्ञानवृत्तिकत्वात् सम्विदेव । तस्या मायायाः स्पर्शाभावाद्विशु
तदुक्तं विष्णुपुराणे—

**सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।**
**स शुद्धः सर्व शुद्धेभ्यः पुमानाद्यः प्रसीदतु।।४९।।**

श्रीदशमे च—'विशुद्धसत्त्वं तव धाम शान्तमित्यादि (२७।४)

'हरि र्हि निर्गुणः साक्षात् ईश्वरः प्रकृतेः परः।
स सर्व्वदृगुपदेष्टा च तं भजन्निर्गुणो भव।।' इति

(१०।८८।५) एकादशे च—(२५।१२)' सत्त्वं रजः स्तम इति गुणा जीवस्य नैव मे
गीतोपनिषत्सु च—(७—१२—१३)—

ये चैव सात्त्विका भावा राजसा स्तामसाश्च ये। मत्त एवति तान् विद्धि न
ते मयि।। त्रिभिर्गुणमयैर्भावैरेभिः सर्व्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्य

अत्र च इदमेव शुद्धसत्त्वं संधिन्यंशप्रधानं चेदाधारशक्तिः ज्ञापनांश—प्रधानमा
ह्लादिनी सारांश—प्रधानं गुह्यविद्या युगपच्छक्तित्रय—प्रधानं मूर्त्तिः। तत्राधारशक्त्या भ

प्रकाशते। तदुक्तं--''यत् सात्वता: पुरुषमुशन्ति सत्त्वं। लोको यत इति। तथा ज्ञानतत्प्रवर्त्तकलक्षणवृत्तिद्वयकयात्मविद्यया तद्वृत्तिरूप मुपासकाश्रयज्ञानं प्रकाशते। एवं भक्तितत्प्रवर्त्तकलक्षणवृत्ति द्वयकया गुह्यविद्यया तद्वृत्तिरूपा प्रीत्यात्मका भक्ति: प्रकाशते। एता एव विष्णुपुराणे(१।९।११८) लक्ष्मीस्तवे स्पष्टीकृता:--

**यज्ञविद्या महाविद्या गुह्यविद्या च शोभने।**
**आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी।।५०।।**

यज्ञविद्या कर्म्म, महाविद्या अष्टांगयोग:, गुह्यविद्याभक्तिं आत्मविद्या ज्ञानं, तत्तत्सर्वाश्रयत्वात् त्वमेव तद्रूपाविविधानां अन्येषाञ्च विविधानां फलानां दात्री भवसीत्यर्थ:। श्रुतिश्च परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति।

अथैवम्भूतानन्तवृत्तिका या स्वरूपशक्ति: सात्विह भगवद्धामांशवर्त्तिनी मूर्त्तिमती लक्ष्मीरेवेत्याह--''अनपायिनी भगवती श्री: साक्षादात्मनो हरे:।' (१२।११।२०) इति; टीका च--अनपायिनी हरे: शक्ति:। तत्र हेतु: साक्षादात्मन: स्व--स्वरूपस्य चिद्रूपत्वात् तस्या स्तदभेदादित्यर्थ: इत्येषा। अत्र साक्षात् शब्देन 'मायापरेत्यभिमुखे च विलज्जमाना इति (२।७।४७)'' विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धिय: ।। (२।५।१४) इत्युक्तया माया नेति ध्वनितं। अत्र अनपायित्वं यथा हयशीर्ष पञ्चरात्रे--

**परमात्मा हरि र्देव: तच्छक्ति: श्रीरिहोदिता।**
**श्रीर्देवी प्रकृति: प्रोक्ता केशव: पुरुष: स्मृत:।।**
**न विष्णुना विना देवी न हरि: पद्मजां विना।।५१।।**
**नित्यैव सा जगन्माता विष्णु: श्रीरनपायिनी।**
**यथा सर्व्वगतो विष्णु स्तथा श्रीस्तत् सहायिनी।।५२।।**
**देवत्वे देवदेहा सा मानुषत्वे च मानुषी।**
**हरे र्देहानुरूपां वै करोत्येषात्मन स्तनुम्।।५३।।**

ब्रह्मसंहितायां (८)--'नियति: सा रमादेवी तत्प्रिया तद्वशम्वदेति। नियम्यते स्वयं भगवत्येव नियताभवतीति स्वरूपभूता शक्ति:। देवी द्योतमाना प्रकाशरूपेत्यर्थ:। चिद्रूपमपि स्कान्दे--

अपरं त्वक्षरं या सा प्रकृति र्जड़रूपिका।
श्रीः परा प्रकृतिः प्रोक्ता चेतसा विष्णुसंश्रया।।५४।।

ततश्च 'भगवान् कृष्णसंज्ञ एव' इति निर्द्धारिते न विष्णुना विना देवीत्य 'देवत्वे देव देहा से' त्यादि तदीयस्वरूपभूता ईशवामांशवर्तिनी लक्ष्मी किमाख्या इति निर्धार्य्या तत्र द्वयोरपि पूर्य्योः श्रीमहिष्याख्या ज्ञेया। तदीय स्वरूपशक्ति स्कान्दप्रभासखण्डेशिवगौरीसम्वादे गोप्यादित्य--माहात्म्ये दृष्टं यथा--

पुरा कृष्णो महातेजा यदा प्रभासमागतः।
सहितो यादवैः सर्वैः षट्पञ्चाशत्प्रकोटिभिः।।५५।।
षोड़शैव सहस्राणि गोप्य स्तत्र समागताः।
लक्षमेकं तथा षष्ठिरेते कृष्णसुताः प्रिये।।५६।।
ततो गोप्यो महादेवि ! विद्या याः षोड़श स्मृताः।
तासां नामानि ते वक्ष्ये तानि ह्येकमनाःश्रृणु।।५७।।
लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया।
भीषणी नन्दिनी शोका सुपूर्व्वा विमला क्षया।।५८।।
सुभद्रा शोभना पुण्या हंसशीता कलाः क्रमात्।
हंस एव यतः कृष्णः परमात्मा जनार्दनः।
तस्यैताः शक्तयो देवि ! षोड़शैव प्रकीर्त्तिता ।।५९।।
चन्द्ररूपी मतः कृष्ण कलारूपास्तु ताः स्मृताः।
संपूर्ण मण्डला तासां मालिनी षोड़शी कलाः ।।६०।।
प्रतिपत्तिथिमारभ्य सञ्चरत्यासु चन्द्रमाः।
षोड़शैव कला यास्तु गोपीरूपा वरानने।।६१।।
एकैकश स्ताः सम्भिन्नाः सहस्रेण पृथक् पृथक्।
एवन्ते कथितं देवि रहस्यं ज्ञान संभवं।
य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैः।।६२।।

तत्र गोप्यो राज्ञ्य इत्यर्थः। गोपो भूपेऽपीत्यमरः। लम्बिनी अवतार—शक्ति हंस शीतेत्यत्र प्राप्तस्य हंसस्य वाच्यमाह हंस एवेति। स च चन्द्ररूपी चन् दृष्टान्तेनोद्देश्य इत्यर्थः। कलारूपा इति ताश्च शक्तयः चन्द्रस्यामृतेत्यादि कल

दृष्टान्तेनोद्देश्या इत्यर्थः।

अनुक्तामन्तिमां महाशक्तिमाह—सम्पूर्णेति। सेयन्तु कला समष्टिरूपा ज्ञेया, दृष्टान्तोपादानाच्चन्द्रस्य तादृशत्वमाहप्रतिपदिति। आसु एतत्तुल्यात्वे विवक्षितमाह—षोड़शैवेति। षोड़शानामेव विद्यारूपत्वात्, एतदुपदेशस्य ज्ञानसम्भव—रहस्यत्वात् तज् ज्ञानस्य वैष्णवत्वानुमापकलिंगत्वाच्च। क्रूराभीषणाशोकानामपि भगवत् स्वरूपभूतानामेव सतीनां ''मल्लानामशनि'' रित्यादिवत् श्रीकृष्णस्य कठिनत्वप्रत्यायकत्वात। 'मृत्यु र्भोजपते'रितिवत् दुर्ज्जनवित्रासकत्वात्। असतां शास्तेतिवत् तदीय शोकहेतुत्वादेवञ्च तत्तन्निरुक्ति रूपपद्यते। यथा प्रकाशैक रूपाया एव सूर्य्यकान्तो रुलूकेषु तामिस्रादिव्यञ्जकता। ''ततश्चन्द्ररूपी मत कष्णः कलारूपं स्तुताः स्मृता इति स्फुटमेव स्वरूपभूतत्वं दर्शितं, तदेवं तासां स्वरूपशक्तित्वे लक्ष्मीत्वं तासां सिद्धत्येव। तदेवमभिप्रेत्य तासां लक्ष्मीत्वमाह श्रीशुकः:—

**गृहेषु तासामनपाय्यातर्क्यकृन्, निरस्त—साम्यातिशयेष्ववस्थितः।**
**रेमे रमाभि र्निजकामसंप्लुतो, यथेतरो गार्हकमेधिकांश्चरन्।।६३।।**

(१०।५९।४३)

टीका च — रमाभि र्लक्ष्म्या अंशभूताभिरित्येषा। स्वरूप शक्तित्वादेव 'रेमे' इत्युक्तं। अतो निजः स्वीयः परमानन्द शक्ति विशेषोदयरूप—प्रेमविशेष— स्वरूपो यः कामः तेन संप्लुतो व्याप्त इति। तत्र श्रीसत्यभामाया भूशक्तिरूपत्वं पाद्मोत्तरखण्डादौ, यमुनायाः कृपाशक्तिरूपत्वं स्कान्दयमुना— माहात्म्यादावित्यन्वेषणीयं हरिवंशादौ सौभाग्यातिशयस्य विवक्षितत्वात् प्रेमशक्ति प्रचुर—भूशक्तित्वं लक्ष्मीस्तु रुक्मिणी।

''द्वारकायामभूद् राजन् ! महामोदः पुरौकसाम्।
रुक्मिण्या रमयोपेतं दृष्ट्वां कृष्णं श्रियः पतिम्।।''(१०।५४।६०)

इत्यादिषु तस्यामेव भूरिशः प्रसिद्धेः। अतः स्वयं लक्ष्मीत्वेनैव परस्पर—योग्यतामाह श्रीशुकः—

**अस्यैव भार्य्या भवितुं रुक्मिण्यर्हति ना परा।**
**असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः।।६४।।** (१०।५३।३७)

अतः स्वयं भगवतोऽनुरूपत्वेन स्वयं लक्ष्मीत्वं प्रसिद्धमेव। अथ श्रीवृन्दावने तदीय—स्वरूपशक्ति—प्रादुर्भावाः श्रीव्रजदेव्यः यथा ब्रह्मसंहितायां—

**आनन्दचिन्मयरस–प्रतिभाविताभि, स्ताभि र्य एव निजरूपतया कलाभि:**
**गोलोक एव निवसत्यखिलात्मभूतो, गोविन्दमादिपुरुषं तमहं भजामि।। ६५**

इति ५।३५

तत्र ताभि: श्रीगोपीभि: । मन्त्रे (५।२४) तच्छब्दप्रयोगात्। आनन्दचिन्मयरसे प्रेमरसविशेषेन प्रतिभाविताभि स्तत् प्रधानाभि रित्यर्थ: ह्लादिनी–सारवृत्ति– विशेषरूपत्वा कलात्वेनैव निजरूपत्वे सिद्धे पुन र्निजरूपतयोक्ति: प्रकटलीलायां परकीयाभासत्वस व्यवच्छेदार्थं। यत: उक्तं तत्रैव 'श्रिय: कान्ता: कान्त: परमपुरुष' (५।५६) श्रीपरमपुरुष रौपपत्यं नास्तीति युक्तञ्च दर्शितवान्। एतदभिप्रायेणैव स्वायम्भुवागमेऽ श्रीभूलीला–शब्दै: तत्प्रेयसी विशेषत्वमुपदिष्टं। अतएव–

''गोपीजना विद्याकलाप्रेरक:' इत्यत्र तापनी–वाक्ये श्रीमद्दशाक्षरस्य नामनिरुक्तौ ये गोपीजना स्ते आ सम्यग् या विद्या परमप्रेमरूपा तस्या: कलावृत्तिरू इति व्याख्येयं। राजविद्या राजगुह्यमित्यादि गीता–प्रकरणात् (९ भगवत्यविद्या–संश्लेषाभावात्, तदुक्तं ह्लादिनीत्यादिना। तत स्तासां प्रेरक स्त क्रीड़ायां प्रवर्त्तक:। स च पतित्व एव विश्रान्त:। इति वल्लभशब्देनैकार्थ्यमेव जन्मजराभ्यां भिन्न इत्यादौ ' स वो हि स्वामी भवतीति' तस्यामेव श्रुतौ ता: प्रा दुर्व्वासावाक्यात्। स्त्री संबन्धे स्वामी शब्द: पत्यावेव रूढ़:। स्वामिनि देवृदेवरावित्यमर–कोषात्। 'पादन्यासै' रित्यादौ (१०।३३।७) ''कृष्ण वध्व'' इ श्रीशुकवचनं।

ऋषभस्य जगु: कृतानीत्यत्र (१०।३३।२१) टीका च ऋषभस्य पत्यु' रित्येष संगीतसारे च 'गोपीपतिरनन्तोऽपि वंशध्वनिवशं गत, इति। ब्रह्माण्डपुराणे श्रुति–गोपीप वंश विभूषितकराम्बुज' इति। श्रीशंकराचार्य्य कृत–यमुनास्तोत्रे च– 'विधेहि तस राधिका धवाङ्घ्रिपंकजे रति' मिति। उद्धवं प्रति श्रीभगवता च–''वल्लव्यो मदात्मिका'' इति (१०।४६।६) तदिदं 'गच्छोद्धव ब्रजं सौम्य पित्रो न: प्रीतिमावह' इति (१०।४६।३) वल्लवाभिमानितामात्मनि व्यज्य श्रीकृष्णस्य वचनं ब्राह्मणस समब्राह्मणीतिवत् गोपरूपस्य समगोपीरूपा इत्यर्थ:। अत स्तासामपि तथैवाभिमा तत्रैवोक्तं–''अपि वत मधुपुर्य्यामार्यपुत्रोऽधुनास्ते।''' इति (१०।२२।४)

तथैव च कुमारीणां संकल्प–वचनं– 'नन्दगोपसुतं देवि ! पतिं मे कुरु नम:। इति (१०।२२।४)

न केवलं साधारणरीत्या दाम्पत्यव्यवहार स्ताभिर्मम किन्तु मदात्मिका मत्स्वरूपशक्तय इत्यर्थः। आत्मशब्दस्य मनोवाचकत्वे 'ता मन्मनस्का' (१०।४६।४) इत्यादावुक्तं पुनरुक्तं स्यात्। उक्तं च तासां स्वरूपशक्तित्वं श्रीशुकदेवेन–

**ताभि र्विधूतशोकाभि र्भगवानच्युतो वृतः।**
**व्यरोचताधिकं तात पुरुषः शक्तिभि र्यथा।।६६।।** इति

ताभिः शक्तिभिः यथा यावत्तथा–'तत्रातिशुशुभे ताभिर्भगवान् देवकीसुत' इत्यादि (१०।३०।७) चकाश गोपीपरिषद्गतोऽर्च्चित' इत्यादि (१०।३२।१४) 'व्यरोचतैणांक इवोडुभिर्वृत इत्यादि (१०।२९।४३) स्वरूप–शक्तित्वादेवाधिकं व्यरोचत इत्याद्युक्तमुपपद्यते। स्वशक्त्यैक्यप्रकाशात् श्रीभगवतः। अतस्तासां लक्ष्मीसंज्ञत्वमप्युक्तं ब्रह्मसंहितायां ''लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमिति (५।२९)। 'श्रियः कान्ताः कान्तः परमपुरुष'' इति (५।५६) श्रीदशमे च–

''गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्त वल्लभमिति (१०।३३।१४) गोप्य एव श्रिय कान्तं मनोहरं एकान्त वल्लभं रहोरमणं 'तस्मात्' नायं श्रियोऽगं इति (१०।४७।६०) शुकानुवादः सामान्ये लक्ष्मी विजयं व्यनक्ति। लक्ष्मी सहस्रेति विरिञ्चिवाणी लक्ष्मी विशेषत्वमुरीकरोति। कुरुत्वेऽपि श्रीयुधिष्ठिरादीनां पाण्डवसंज्ञत्वं लक्ष्मीत्वेपि व्रजदेवीनां गोपी संज्ञत्वमिति। तस्मात्तासां परमलक्ष्मी रूपत्वेन तन्नित्यप्रेयसीत्वं सिद्धं। तथाच गौतमीय तन्त्रे दशार्ण व्याख्यायां (२०।२१)

**गोपीति प्रकृति विद्याज्जन स्तत्त्व–'समूहकः।**
**अनयोराश्रयो व्याप्त्या कारणत्वेन चेश्वरः।।६७।।**
**सान्द्रानन्दपरं ज्योति र्वल्लभेन च कथ्यते।**
**अथवा गोपीप्रकृतिर्जन स्तदंशमण्डलं।।७८।।**
**अनयो र्वल्लभः प्रोक्तः स्वामी कृष्णाख्य ईश्वरः।**
**कार्य्यकारणयोरीशः श्रुतिभि स्तेन गीयते।।६९।।**
**अनेकजन्मसिद्धानां गोपीनां पतिरेव वा।**
**नन्दनन्दन इत्युक्त स्त्रैलोक्यानन्द–वर्द्धनः।।७०।।**

अतएव प्रथमा प्रकृतिः प्रधानं, द्वितीया स्वरूपशक्तिः तत्त्वानि महदादीनि अंशाः–

**ज्ञानशक्तिबलैश्वर्य्य वीर्य्यतेजांस्यशेषतः।**
**भगवच्छब्द–वाच्यानि विना हेयैर्गुणादिभिः।।७१।।**

अत्र अनेकजन्मसिद्धानामिति बहूनि मे व्यतीतानि जन्मानि तव चार्ज्जुन' इतिवत् अनादिसिद्धत्वमेव बोधयति। 'पतिरेवे' त्येव कारेण प्रकटलीलायामुमपतित्व–व्यवहारस्तु मायिकएवेत्यर्थः । स चाग्रे दर्शयिष्यते। वा शब्दस्तस्यैवोत्तरपक्षताबोधाय तदेवमादिभि विशिष्टत्वेनैव तदाराधनादासां नित्यप्रेयसीत्वंसिद्धांतच्छ्रुतीनां तदारधाना चानाद्यनन्तभावित्वात्। स हि मन्त्रे चतुर्धा प्रतीयते। मन्त्रस्य कारणरूपत्वेन वर्णसमुदायरूपत्वेन, अधिष्ठातृदेवता रूपत्वेन, आराध्यरूपत्वेन च। अत्र कारणरूपत्व तदधिष्ठातृदेवतारूपत्वञ्चोक्तं ब्रह्मसहितायां– 'प्रकृत्या पुरुषेण चेति' (५।३) प्रकृतिर्मन्त्रस्य स्वरूपं स्वयमेव श्रीकृष्णः कारणरूपत्वात्, तदेवोक्तमृष्यादि स्मरणे कृष्णः प्रकृतिरिति स एव अधिष्ठातृदेवतारूपः। वर्णसमुदायरूपञ्चोक्तं तत्रैव– 'कामः कृष्णाये' त्यादिना (५।२४) उक्तञ्च हयशीर्षपञ्चरात्रे 'वाच्यत्वं वाचकत्वञ्च देवतामत्रन्योरिह। अभेदेनोच्यते ब्रह्मन् तत्त्वविद्भिश विचारतः।' इति। आराध्यरूपत्वञ्च तत्रैव ब्रह्मसंहितायां ''ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।''

अनादिरादिरित्यादिना (५।१) क्वचिद् दुर्गाया अधिष्ठातृत्वं तु शक्ति–शक्तिमतोरभेद–विवक्षया। अत उक्तं गौतमीय–कल्पे–यः कृष्णः सैव दुर्गा स्याद् या दुर्गा कृष्ण एव सः'' इति। यतः श्रीकृष्ण स्तत्र स्वरूप शक्तिरूपेण दुर्गा नाम, तस्मान्नेयं मायांशभूता दुर्गा इति गम्यते। निरुक्तिश्चात्रदुःखेन गुर्वाराधनादि–प्रयासेन गम्यते ज्ञायते इति। तथाच नारदपञ्चरात्रे श्रुतिविद्यासम्वादे–

जानात्येका परा कान्तं सैव दुर्गा तदात्मिका।
या परा परमा शक्ति र्महाविष्णु–स्वरूपिणी।।७२।।
यस्या विज्ञानमात्रेण पराणां परमात्मनः।
मुहूर्त्तादेव देवस्य प्राप्ति र्भवति नान्यथा।।७३।।
एकेयं प्रेमसर्वस्वभावा श्रीगोकुलेश्वरी।
अनया सुलभो ज्ञेय आदिदेवोऽखिलेश्वरः।।७४।।
भक्तिर्भजन–सम्पत्ति र्भजते प्रकृतिः प्रियं।
ज्ञायतेऽत्यन्तदुःखेन सेयं प्रकृतिरात्मनः।
दुर्गेति गीयते सर्वैरखण्ड–रसवल्लभा।।७५।।
अस्या आवरिका शक्ति र्महामायाऽखिलेश्वरी।।
यया मुग्धं जगत्–सर्वं सर्वदेहाभिमानिनः।।७६।।

इति अतएव–''मायां व्युदस्य चिच्छक्तया कैवल्ये स्थित आत्मनीति'' प्रथमोक्तेः (७।२३)। न यत्र माया किमुता परे हरे' रिति द्वितीयोक्तेः (९।१०) मायातीत–वैकुण्ठावरण कथने यथोक्तं पाद्मोत्तरखण्डे–

'सत्याच्युतानन्तदुर्गा–विष्वक्सेन गजाननाः।
शंखपद्मनिधी लोकाश्चतुर्थावरणं स्मृतं।।''

इत्याद्युक्त्वा–नित्याः सर्वे परे धाम्नि ये चान्येऽपि दिवौकसः।
ते वै प्राकृतनाकेऽस्मिन्ननित्या स्त्रिदिवेश्वराः।।'

इति तेषां श्रीभगवदंशरूपत्वमुक्तं त्रैलोक्यसम्मोहन तन्त्रे–

**सर्व्वत्र देवदेवोऽसौ गोपवेशधरो हरिः।**
**केवलं रूपभेदेन नामभेदः प्रकीर्त्तितः।।७७।।**

अतो नाममात्र–साधारणोऽनन्यभक्तै र्न विभेतव्यं, किन्तु भागवतै र्नित्य–वैकुण्ठसेवकत्त्वात् विष्वकसेनादिवत् सत्कार्य्या एव ते। ''अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तुयः'' इत्यादिवचनेन तदसत्कारे दोष–श्रवणात्। अतएव तानेवोद्दिश्य उक्तमेकादशे–२७।२९

**दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान्।**
**स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभिः।।७८।।**

अथ प्रकृतमनुसरामः। तदेव श्रीगोपीनां स्वरूपशक्तित्वे प्रसिद्धे श्रीकृष्णस्य नित्यप्रेयसीरूपत्वं सिद्धमेव। तत स्ताभिः सह तस्य पूजनस्य आवश्यकता स्वतः सिद्धा। अत्र पुनः प्रतिवादी प्राह। यदि ताः कृष्णस्य नित्यप्रियाः तर्हि कथं परकीयारूपत्वं। तत्रापि पुत्रादि–संयोक्तृत्वं श्रूयते; सत्यं, तद्रूपत्वं मायिकमिति वैष्णवतोषणीनाम्न्यां श्रीदशमटिप्पन्यां कृष्णसंदर्भादौ च प्रमितमिति विस्तरभिया नात्र प्रपञ्चितम्।

अथ सामान्यतः श्रीकृष्णप्रियाः, खलुद्विधाः नित्यसिद्धाः साधनसिद्धाश्च। तत्र नित्यसिद्धाः पूर्व्वोक्ताः साधन सिद्धाश्च त्रिविधाः। ऋषिजाः श्रुतयो देवकन्याश्च। तत्र ऋषिजा यथ पाद्मोत्तरखण्डे–

**पुरा महर्षयः सर्व्वे दण्डकारण्यवासिनः।**
**दृष्ट्वा रामं हरिं तत्रभोक्तु मैच्छन् सुविग्रहम्।।७९।।**
**ते सर्व्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।**
**हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्।।८०।।**

इति न च वक्तव्यं गोकुलजातानां प्रापञ्चिकदेहादित्वेन सम्भवतीति, अवतार लीलायाः प्रापञ्चिक–मिश्रत्वात्, श्रीदेवकीदेव्यामपि षड्गर्भसंज्ञकानां जन्म श्रूयते इति।

श्रुतयो यथा बृहद्वामनपुराणादिषु श्रूयन्ते, यत एव यथा व्याख्यातं 'स्त्रिया उरगेन्द्रभोगभुजदण्ड– विषक्तधियो वयमपीति'' (१०।८७।२३) गायत्री च तासु जातेति पाद्मे सृष्टिखण्डे यथा ब्रह्मणा गोपकन्याया गायत्र्या उद्वाहे गोपेषु श्रीविष्णुवाक्यम्–

**''मया ज्ञात्वा ततः कन्या दत्ता चैषा विरिञ्चये।**
**युष्माकञ्च कुले चाहं देव–कार्य्यार्थ–सिद्धये।**
**अवतारं करिष्यामि मत्कान्ता तु भविष्यतीति।।८१।।**

देवकन्याश्च यथा श्रीदशमे–(१।२३)'तत्प्रियार्थं सम्भवन्तु सुरस्त्रिय' इति। अत्र सुरस्त्रिय स्तासां श्रीकृष्णप्रियाणामुपयोगायैवेति गम्यते। अत स्तत्प्रियार्थमित्येवोक्तं, न तु तत्प्रीत्यर्थमिति। अत स्तासां चर्तुर्व्विधत्वमुक्तं पाद्मे–

**''गोप्यस्तु ऋषिजा गोपकन्यकाः श्रुतिजाः पराः।**
**देवकन्याश्च राजेन्द्र ! न मानुष्यः कथञ्चन।।८२।।** इति

गोपकन्या एव नित्याः, न मानुष्यः कथञ्चनेति प्राकृत मानुष्यनिषेधात्। अत स्तासां स्वरूपशक्तिवादेव श्रीभगवतस्ताभिः सह रिरंसा जाता; यथाह श्रीशुकः–

**भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः।**
**वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः।।८३।।** इति

ता रात्री वीक्ष्य उद्दीपनत्वेनानुभूयेति कैमुत्येनालम्बन रूपाणां तासा प्रेममहिमा दर्शितः।

'आत्मारामाश्च मुनयः'–इत्यादौ इत्थम्भूतगुणोहरिरितिवत् इत्थम्भूतगुणा स्ताः येन तादृश्यपि तस्य रमणेच्छाजायते इति। अतएव व्यवायार्थं तस्य कैशोरमपि मानितं जातमिति' श्रीविष्णु पुराणे दर्शितं। ''सोऽपि कैशोरक-वयो मानयन् मधुसूदनः। रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः।।'इति। हरिवंशे च–:''युवती र्गोपकन्याश्च रात्रौ संकाल्य कालवित्। कैशोरकं मानयानः सह ताभिर्मुमोद ह।। इति

अत्र कालविदित्यस्य व्याख्यानं ता रात्री वीक्ष्येति ।

सह ताभि र्मुमोद हेत्यस्य सूचकं 'रन्तुं मनश्चक्रे।इति।

इत्यालम्बनकालदेशानां श्रीकृष्णाय परमसुखदत्वं दर्शितं तस्मात् ह्लादिनीशक्ति–विलासलक्षण–तत्प्रेम–मय्येवैषा रिरंसा, न तु प्राकृतकाममयीति। श्रीस्वामिभिरपि व्यक्तमुक्तं–द्वात्रिंशे विरहालापविक्लिन्न–हृदयो हरिरिति ''स्वप्रेमामृतकल्लोलविह्वलीकृत चेतस'' इति। अतएव तच्छ्रवणफल द्वारा तदर्च्चनस्यावश्यकतां दर्शयति श्रीमन्मुनीन्द्र:।

**विक्रीड़ितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धान्वितोऽनु श्रृणुयादथ वर्णयेद् यः।**
**भक्तिं परां भगवति प्रतिलभ्य कामं, हृद्रोगमाश्वपहिनोत्यचिरेण धीरः।।८४।।**

(१०।३३।३९) इति

अत्र स्वप्रियाभि: सम्बलितस्य श्रीकृष्णस्य क्रीड़ाया: श्रवण वर्णन मात्रेण बहुसाधनदु:साध्यापि परा भक्तिरुदयते। उदयमात्रेण च हृद्रोग: शीघ्रमपहियते इति हि स्पष्टमेवेति फलातिशय–कथनेन प्रवर्त्तनात् विधित्वमेव सिध्यति। 'यस्य पर्णमयी जुहू र्भवति, न स पापं श्लोकं श्रृणोतीतिवत्। न चाधिकारी कनिष्ठ इति वाच्यं, धीर इत्युक्तत्वात्।

अथ दशार्णमन्त्रे नामान्तरेणानिर्दिश्य श्रीवल्लवीनां नाम विशेषमालम्व्यैव स्वयं भगवतो निर्द्देशात् तासां तत्परिचायकांगरूपत्वमेव बोधितं। 'गोपीगोपपशूनां बहि: स्मरेदस्य गीर्वाणघटानित्यादि' क्रमदीपिकायां (३।३२) गौतमीयतन्त्रे–

**नवीन नीरदश्यामं नीलेन्दीवरलोचनं।**
**वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम्।।८५।।**
**इत्यादौ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिस्वनैः।**
**लसद्गोपालिका–चेतो मोदयन्तं मुहुर्मुहुः।।८६।।**
**वल्लवीवदनाम्भोजमधुपान– मधुव्रतम्।**
**क्षोभयन्तं मन स्तासां सुस्मेरापांगवीक्षणैः।।८७।।**
**यौवनोद्भिन्नदेहाभिः संसक्ताभिः परम्परम्।**
**विचित्राम्बरभूषाभि र्गोपनारीभिरावृतमिति।।८८।।**

अत्र 'सा त्वां ब्रह्मन् नृपवधू: काममाशु भजिष्यतीति (३।२१।२८) कर्दमं प्रति श्रीशुक्लवचनवच्च गोपजातिभि र्नारीभि: रित्यर्थ:

'क्षोभयन्तं मोहयन्तं मुहुर्मुहु' रिति वर्त्तमानद्वय प्रयोगेननित्यमेवतदुपासकैः पठ्यमानस्तवेन (गोपी–कृष्णयोः) नित्यत्वमेव लक्ष्यते। सनत्कुमारकल्पे च–गोपांगना परिवृतं मूले कल्पतरोः स्थित' मित्यादि।–

रुद्रयामलस्य शौरितन्त्रे 'गोपीगोगोपवीतो रुरुनखविलसत् कण्ठभूषश्चिरं न'' इत्यादि। मृत्युञ्जयतन्त्रे–

''स्मरेद् वृन्दाबने रम्ये मोहयन्तमनारतं।

वल्लवी वल्लभं कृष्णं गोपकन्यासहस्रशः।। इत्यादि।

'फुल्लेन्दीवरकान्तिमित्यादि एवं स्वयम्भुवागमादावपि।।

पुनः प्रतिवादो प्राह–भवतु नाम ताः पूज्याः किन्तु तासां नाम कुत्रापि न श्रुतं। तत्रापि भविष्योत्तरे मल्लद्वादशी–प्रसंगे श्रीकृष्णयुधिष्ठिर सम्वादे–

**'गोपीनामानि राजेन्द्र प्राधान्येन निबोध मे।**

**गोपालीपालिका धन्या विशाखा ध्याननिष्ठिका।**

**राधानुराधा सोमाभा तारका दशमी तथा ।।८९।।**

गोपीलीयं नूनं पाद्मोक्त गायत्रीचरीभवेत्।। पालिकेति संज्ञायां कण्। दशमी तथेति दशमीत्यपि–

नामैकं, तच्चान्वर्थमिति सर्व्वान्ते पठितं। यद्वा तथेतिदशम्यपि तारकानाम्नीत्यर्थः। तथा स्कान्दे प्रह्लादसंहितायां द्वारका–माहात्म्ये मायावसर प्रस्तावे उद्धवगमने (१२।५।३३) ललितोवाचेत्यादिनां ललिता श्यामला धन्या विशाखा राधा शैव्या पद्मा भद्रा इत्येतानि अष्टौ गणितानि। अथ वनिताशतकोटिभि राकुलित' मित्यागम प्रसिद्धेः, 'वनिताशतयूथप' इति श्रीभागवत प्रसिद्धे। अन्यान्यपि लोकशास्त्रयो रवगन्तव्यानि। अथ शतकोटित्वान्यथानुपपत्त्या तासां तन्महाशक्तितत्वमेव गम्यते। तत्रापि सर्व्वथा श्रेष्ठे राधा–चन्द्रावलीत्युभे। भविष्योत्तरे सोमाभाशब्देन चन्द्रावल्येव सूचिता, अर्थ साम्यप्रायात। यतः श्रीराधया सह प्रतियोगित्वमैतिह्यमस्यात्र विराजते। तथा च श्रीविल्वमंगलचरणाः–

**राधामोहन मन्दिरादुपगत श्चन्द्रावलीमूचिवान् !**

**राधे क्षेममयेऽति तस्यवचनं श्रुत्वाह चन्द्रावली।**

**कंस क्षेममयेविमुग्धहृदये कंसः क्वदृष्टस्त्वया,**

**राधा क्वेति विलज्जितो नतमुखस्मेरो हरिः पातु वः।।९०।।**

तयोरप्युभयो र्मध्ये राधिका सर्वथाधिका ।
महाभाव स्वरूपेयं गुणैरतिवरीयसी।।९१।।

यथोक्तं मत्स्यपुराणे दक्षं प्रति देवी वचनं--

'रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने।
चित्रकूटे तथा सीता विन्ध्ये विन्ध्यानिवासिनी।
देवकी मथुरायान्तु पाताले परमेश्वरीत्यादि।।९२।।

रुक्मिणी--सहपाठादित्थं बोधयति--यथा द्वारकायां तस्या एव सर्व्वथाधिक्यं तथा श्रीवृन्दाबने तस्या इति। स्वरूप शक्तिव्यूह--रुक्मिणीराधा देवकीनां मायांशरूपेणाभेदकथनन्तु शक्तित्व साधारण्येनैव। यथा जीवात्म--परमात्मनोश्चित्--साम्येनैक्यं तद्वदिति। अथ यथा रुक्मिणी--कृष्णयो: परस्पर शोभित्वं श्रीशुकेन वर्णितं--अस्यैव भार्य्या भवितुमित्यादिनां (१०।५२।३७) तथैव राधाकृष्णयोरपि ऋक् परिशिष्टे श्रुत्या वर्णितं--राधया माधवो देवो माधवेनैव राधिका विभ्राजन्ते जनेष्वा' इति। विभ्राजन्ते विभ्राजते आ सम्यक् इति श्रुतिपदार्थ:। दर्शितञ्च तस्या: स्वरूपं वृहद्गौतमीये बलदेवं प्रति श्रीकृष्णेन--

सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल।
त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा।।९३।।
प्रकृते: पर एवाहं सापि मच्छक्तिरूपिणी।
सात्त्विकं रूपमास्थाय पूर्णोऽहं ब्रह्म चित्पर:।।९४।।
ब्रह्मणा प्रार्थित: सम्यक् सम्भवामि युगे युगे।
त्वया सार्द्धं तयासार्द्धं नाशाय देवताद्रुहामिति।।९५।।

अत्र सत्त्वं कार्यत्वं, तत्त्वं कारणत्वं परत्वं। ततोऽपि श्रेष्ठ्यं यत्तत्त्वत्रयं तदहमित्यर्थ: तथैव बोधयति तथैवाग्रे ध्यानप्रसंगे--

देवस्याभेदरूपेण तप्तहेमसमप्रभां।
रक्तवस्त्रपरीधानां रक्तालंकार--भूषितां।।९६।।
श्रीराधां वामभागे तु पूजयेद् भक्तितत्परै:।
देवी कृष्णमयी प्रोक्ता राधिका परदेवता।।९७।।
वराभयकरा ध्येया सेविता सर्वदैवतै:।

सर्वलक्ष्मीमयी सर्व्वकान्ति सम्मोहिनी परा।।९८।। इति
अत्र पूजयेदिति कष्ठोक्तिरेव, एवमग्रेऽपि मृत्युञ्जयतन्त्रे—

पीतवस्त्रपरीधानां वंशयुक्तकराम्बुजां।
कौस्तुभोद्दीप्तहृदयां बनमाला—विभूषितां।
श्रीमत्कृष्णाङ्घ्रि—पल्यंकनिलयां परमेश्वरीमित्यादि।।९९।।
तथा—सर्वलक्ष्मीमयीं देवीं परमानन्द—नन्दितां।
रासोत्सवप्रियां राधांकृष्णानन्दस्वरूपिणीं।
भजे चिदमृताकार— पूर्णानन्दमहोदधिं।। १००।। इति ध्यात्वेत्यादि

सम्मोहनतन्त्रे—चिन्तयेद् राधिकां देवीं गोप गोकुलसंकुलामित्यादि च।
अस्या: श्रेष्ठत्वमादिवाराहे—(कटिर—परिवर्त्तन्यां गोवर्द्धन परिक्रमे तत्कुण्डप्रसंगे) तथा—

गंगाया श्चोत्तरं गत्वा देवदेवस्य चक्रिण:।
अरिष्टेन समं तत्र महद् युद्धं प्रवर्त्तितम्।।१०१।
घातयित्वा तत स्तस्मिन्नरिष्टं वृषरूपिणं।
कोपेन पार्ष्णिघातेन महातीर्थं सकल्पितं।।१०२।।
स्नात स्तत्र तदा हृष्टो वृषं हत्वा सगोपक:।
विपाप्मा राधिकां प्राह कथं भद्रे भविष्यति।।१०३।।
तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारिणं।
स्वनाम्ना विदितं कुण्डं कृतं तीर्थमदूरत:।।१०४।।
राधाकुण्डमिति ख्यातं सर्व्वपापहरं शुभं।
अरिष्टहन् राधाकुण्डस्नानात् फलमवाप्यते।।१०५।।
राजसूयाश्वमेधाभ्यां नात्र कार्य्या विचारणा।
गोहत्या—ब्रह्महत्यादि पापं क्षिप्रं प्रणश्यति।।१०६।।

अत्र सतीष्वपि सर्व्वासु तासु अस्या एव तेन सह तादृश प्रेमव्यवहारेणोत्कर्षावगमात् श्रेष्ठत्वमायातं। तथा व्रतरत्नाकर धृतभविष्यपुराणे च—

बाल्येऽपि भगवान् कृष्ण स्तरुणं रूपमाश्रित:।
रेमे विहारै र्विविधै: प्रियया सह राधया।। १०७।।

एकदा कार्त्तिके मासि पौर्णमास्यां महोत्सवः। आसीन्नन्दगृहे इत्यादे....

तस्मिन् दिने च भगवान् रात्रौ राधा–गृहं ययौ।
सा च क्रुद्धा तमुदरे काञ्चीदाम्ना बबन्ध ह।१०८॥
कृष्णस्तु सर्व्वमापेद्य निजगेह–महोत्सवं।
प्रियां प्रसादयामास ततः सा तमवोचयत्।१०९॥
इदञ्चोवाच तां कृष्णः प्रेयसी प्रीतमानसः।
काञ्चीदाम त्वया तन्वि! उदरे यन्मयार्पितं।११०॥
दामोदरेति मे नाम प्रियं तेन शुभानने।
नातः प्रीतिकरं नाम मम लोकेषु विद्यते।१११॥
नित्यमेतत् प्रजापत्यां सर्व्वसिद्धि भविष्यति॥
भक्तिञ्च दुर्लभां प्राप्य मम लोके महीयते।११२॥
उलूखले यदा मात्रा बद्धोऽहं भविताप्रिये !
उदरे दामभि र्लोके तदा व्यक्तं भविष्यति।११३॥
अनेन नाममन्त्रेण योऽस्मिन् मासि त्वया सह।
मामर्चयेद्विधानेन स लभेत् सर्वावाञ्छितमिति।११४॥

अत्रापि प्रियया सह राधया इति श्रीकृष्णेच्छया श्रीकृष्णवद् बाल्येपि आविष्कृतनवयौवनमेव--इति ज्ञेयं।

'तत आरभ्य नन्दस्य व्रजः सर्व्वसमृद्धिमान्।
हरे र्निवासात्मगुणै रमाक्रीड़मभून्नृप।११५॥ (१०।५।१८)

इत्यनेन श्रीकृष्णप्रादुर्भावानन्तरं तासामाविर्भावकथनात्, तत्रापि श्रेष्ठत्वं पूर्व्ववज्ज्ञेयं। तत्र तादृशभावै वर्णनं तस्याः श्रीशुकदेवेनापि कृतं।

एका भ्रुकुटीमाबध्य प्रेमसंरम्भ विह्वला।
घ्नन्तीवैक्षत् कटाक्षेपैः सन्दष्टदशनच्छदा॥११६॥ (१०।३२।६)

इत्यनेन--एकामुख्या 'एके मुख्यान्यकेवला इत्यमरः।' एवं श्रीमद्गोपाल तापन्यां यद्गान्धर्वीति विश्रुता सा तु सैव ज्ञेया। तस्या एवं मुख्यत्वादिलिङ्गेन सर्वत्र चावगमात्। अतएव श्रीराधा सम्बलित दामोदरपूजा कार्त्तिके विहिता। श्रीकृष्णसत्यभामा सम्वादीये कार्त्तिक माहात्म्ये च प्रातः स्नान संकल्पमन्त्रं--(हरिभक्ति विलासः १६।१७२)--

कार्त्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्द्दन !
प्रीत्यर्थं तव देवेश दामोदर मया सह।।११७।।

अत्र 'मा' शब्द–प्रयोगः। तस्याः परमलक्ष्मीरूपत्वात्। अर्घ्यदानमन्त्रे च–साक्षात्तन्नामोक्तेः। यथा–

'व्रतिनः कार्त्तिके मासि स्नानस्य विधिवन्मम।
दामोदर गृहाणार्घ्यं दनुजेन्द्र–निसूदन....!!११८।।
नित्ये नैमित्तिके कृत्स्ने कार्त्तिके पापशोषणे।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे।।'।।११९।।

इति युग्मत्वेन उपादानात् तस्या एवं श्रेष्ठत्वं। तद्युगलोपासनायां भविष्यपुराण वचनं दर्शितमेव। तथा दशाध्यायि कार्त्तिक माहात्म्यं चेन्नूनं पाद्मानुगतं स्यात्तर्हि तत्र तद्युगलोपासनं प्रकटतर मेवेति। तथा वासनाभाष्योत्थापित आग्नेयवचनेऽपि तस्याः श्रेष्ठत्वं।

यथा–गोप्यः पप्रच्छु रुषसि कृष्णानुचरमुद्धवं।
हरिलीलाविहारांश्च तत्रैकां राधिकां बिना ।
राधा तद्भावसंलीना वासनाया विरामिता।।१२०।। इत्यादि

अत्र तद्भावसंलीना इत्यनेन दिव्योन्मादमयवचनं 'मधुप कितवबन्धो' इत्यादिकं तस्या एवेति विज्ञाप्य सर्व्वासु गोपीषु तस्याः श्रैष्ठ्यं दर्शितं। युक्तञ्च तत्तु यतः–श्रीकृष्णान्वेषणकर्त्रीणां तासां तामेवोद्दिश्य तदिदं वचनं श्रूयते यथा–

अनया राधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः।। १२१।।

अप्येणपत्न्युपगतः प्रिययेह गात्रैः स्तन्वन् सखि ! सुनिर्वृतिमच्युतो वः।
कान्तांगसंग-कुचकुंकुम-रञ्जितायाः कुन्दस्रजः कुलपतेरिह वातिगन्धः ।।१२२।।
(१०।२०।११) १२२।।

बाहुं प्रियांस उपधाय गृहीतपद्मो, रामानुज स्तुलसिकालिकुलै र्मदान्धैः।
अन्वीयमान इह व स्तरवः प्रणामं, किम्वाभिनन्दति चरन् प्रणयावलोकैः।।१२३।।
इति (१०।३०।१२)

किं बहुनां—अस्याः सौभाग्यवाञ्छा द्वारकामहिषीणामपि श्रूयते। तत स्तासां
ादृशवचनं श्रीशुकदेवेनाप्युदितं (१०।८३।४१) यथा– 'न वयं' साध्वि
साम्राज्यमित्याद्युक्त्वा आहुः–

**'कामयामह एतस्य श्रीमत् पादरजः श्रियः।**
**कुचकुंकुम–गन्धाद्यं मूर्द्धना वोढुं गदाभृतः ॥१२४॥** (१०।८३।४२)
**व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्दा स्तृणवीरुधः।**
**गावश्चारयतो गोपाः पादस्पर्शं महात्मनः।१२५॥** इति

व्रजस्त्र्यादीनां वाञ्छा दर्शिता–

**पूर्णाः पुलिन्द्य उरुगाय–पदाब्जराग–**
**श्रीकुंकमेन दयितास्तन–मण्डितेन।**
**तद्दर्शन–स्मररुज स्तृणरुषितेन,**
**लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्।१२६॥**

इत्यनेन । अत्र सत्युरुगाय–पदाब्जरागेत्यनेन (१०।२१।१७) सह
यितास्तनमण्डितेन' इत्युक्तत्र तत् कुंकु मंदायितास्तनत स्तस्यपदेलग्नमिति गम्यते।
च दयिता–कुच कुंकु मगन्ध्याढयमित्येक वचनान्तनिर्द्देशेनानूदिता। तदिदं वर्णयन्तीषु
स्वपि सा विशिष्टेत्यवगम्यते। अयं भावः—श्रीत्वे प्रसिद्धायाः श्रियस्तत्र कामनैव
यते, न तु संगतिः। 'यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रतेति'
गपत्नीनां, "या वै श्रियार्चिता मजादिभि राप्तकामै" रित्यादि (१०।४७।६२)
द्धवस्यापि वाक्यात्। न च रुक्मिणीत्वे प्रसिद्धायाः श्रिय स्तत्र संगतिः। कालदेशयो
यतमत्वात्। न च व्रजस्त्रीणां श्रीसम्बन्ध लालसा युक्ता, 'नायं श्रियोऽगें'त्यादिना
०।४७।६०) ततोऽपि परमाधिक्य–श्रवणात्। तस्माद् 'रुक्मिणी द्वारवत्यान्तु राधा
दाबने बने' इत्यादावुक्त–सिद्धान्तानुसारेण सर्व्वतो विलक्षणा या श्रीर्विराजते,
मुद्दिश्यैव ब्रजदेवीनां तदिदं वाक्यं। ततश्च तासां यथा तत्र स्पृहास्पदता, तथास्माकं
महिषीणामिति। संगमश्चायं दिवस एवेति सम्भाव्यते। तत्रैव पुलिन्दानां भ्रमणात्
कुमानां लेपनकर्म्मणार्द्रत्वावगमाच्च। द्वयोः संगमश्चायं न सम्भोगविशेषरूपः।
प्रसंगे–

"भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः वीक्ष्यरन्तुं मनश्चक्रे" इत्यत्रैव

नवसंगमस्य प्रतीयमानत्वात्। अन्यथा तत्र परीक्षार्थं पुन स्तेनोपेक्षावचनस्यासंगतत्वापत्तेः। तदिदं वेणु प्रकरणे भणितत्वाद् वेणुसम्बन्धेनैव गम्यते।'उरुगाय इत्यनेनैष एव संसूचितः। तस्मात् कदाचिद् वेणुकृताकर्षाया स्तस्या लब्धमूर्च्छाया, मूर्च्छाशान्तये सकुंकुमे स्विन्ने वक्षसि संभ्रमतः केवलेन श्रीचरणसंजीवनीपल्लवेन स्पृशन्नेवाद्यापि सम्यक् संकोचानपगमात् द्रुतमेव स तस्मान्निश्चक्रामेति बुध्यते। 'काश्चित् परोक्ष' कृष्णस्य स्वसखीभ्योऽन्ववर्णयन्निति (१०।२१।३) उक्तत्वात्। यास्तु तदन्या स्तासामेव 'पूर्णाः पुलिन्द्यः' (१०।२१।१७) इत्यादि वचनम्। तस्मात् साध्वेवोक्तं—लक्ष्मीरभितः स्मितमा इत्यादि। वर्णिता च सा तथैव श्रीजयदेवसहचरेण महाराज लक्ष्मणसेनमन्त्रिवरेणोमा—पतिधरेण यथा—

भ्रूवल्लीबलनैः कयापि नयनोन्मेषैः कयापिस्मित।
ज्योत्स्ना—विच्छुरितैः कयापि निभृतं संभवितस्याध्वनि।
गर्व्वोद्भेदकृतावहेल—ललित श्रीभाजि राधानने,
सातङ्कानुनयं जयन्ति पतिताः कंसद्विषो दृष्टयः।१२७।

(पद्यावली २६०) इति

श्रीजयदेवेनापि—'राधामाधाय हृदये तत्याज व्रजसुन्दरी रिति' (गीतगोविन ३१) पत्युर्मनः कलित' मिति च (१२१४) अतएव 'या परा परमा शक्ति र्महाविष्णु—स्वरूपिणी। तस्या विज्ञान मात्रेण पराणां परमात्मनः। मुहूर्त्तादेव देवस्य प्राप्ति र्भवति नान्यथा। एकेयं प्रेमसर्व्वस्वभावा श्रीगोकुलेश्वरी। अनया सुलभो ज्ञे आदिदेवोऽखिलेश्वरः। इत्युत्थापितपञ्चरात्र—वचनं सर्वोपरि विराजमानं भवतीत्य-लमतिविस्तरेण प्रमाणवचन—संग्रहेण।

तस्मात् सर्व्वासां गोपीनां राधिकातिगरीयसी। सर्व्वाधिक्येन कथित यत् पुराणागमादिषु।।

अतः साधूक्तं—श्रीदामोदरराधार्च्चनमर्हति व्रजस्थानामित्यादि।

राधा वृन्दाबने यद्वत्तद्वद् दामोदरो हरिः।
दर्शितेषु च शास्त्रेषु तद्युग्मं ततदीशितुः।१२८।।
राधया माधवो देवो माधवेनैव राधिका।
विभ्राजन्ते जनेष्वेति परिशिष्ट—वच स्तथा।१२९।।

न विष्णुना विना देवी न हरिः पद्मजां विना।
हयग्रीवपञ्चरात्रमिह प्रकटितं यतः।।१३०।।
कार्त्तिकव्रतचर्य्यायामत स्ते युग्मदेवते।
राधादामोदराभिख्ये वीक्ष्येते लोक शास्त्रयोः।।१३१।।
किं बहूक्त्या कुण्डयुग्मं तयोर्युग्मेन वक्ष्यते।
शास्त्रे च दर्शिता तस्मात् कैमुत्याद् युग्मता तयोः।।१३२।।
उमा—महेश्वरौ केचित् लक्ष्मीनारायणौ परे।
ते भजन्तां भजामस्तु राधादामोदरौ वयं।।१३३।।

इति श्रीवृन्दाबनवासिनः कस्यचिज्जीवस्य
श्रीराधाकृष्णार्च्चनदीपिका सदा
देदीप्यमानतामापद्यताम्।।
श्रीगुरु चरणकमलेभ्यो नमः।।
श्रीकृष्णचैतन्यचन्द्राय नमः।।
श्रीराधादामोदराभ्यां नमः।।

## श्रीहरिदास शास्त्री सम्पादित ग्रन्थावली

१—वेदान्तदर्शनम् ''भागवतभाष्योपेतम्'' महर्षि श्रीकृष्णद्वैपायन व्यासदेव प्रणीत ।
२—श्रीनृसिंह चतुर्दशी भक्ताह्लादकारी श्रीनृसिंहदेव की महिमा ।
३—श्रीसाधनामृतचन्द्रिका गोवर्द्धन निवासी सिद्ध श्रीकृष्णदास बाबा विरचित ।
४—श्रीसाधनामृतचन्द्रिका (बंगला पयार) ।
५—श्रीगौरगोविन्दार्चन पद्धति गोवर्द्धन निवासी सिद्ध श्रीकृष्णदास बाबा विरचित ।
६—श्रीराधाकृष्णार्चन दीपिका श्रीजीवगोस्वामिपादकृत ।
७—श्रीगोविन्दलीलामृतम् मूल, टीका, अनुवाद सह—१—४सर्ग।
८—श्रीगोविदलीलामृतम् ५ सर्ग से ११ सर्ग पर्यन्त (टीका सानुवाद) ।
९—श्रीगोविन्दलीलामृतम् १२ सर्ग से २३ सर्ग पर्यन्त (टीका सानुवाद) ।
१०—ऐश्वर्यकादम्बिनी (मूल अनुवाद) श्रीबलदेवविद्याभूषणकृत ।
११—संकल्प कल्पद्रुम (सटीक, सानुवाद) श्रीविश्वनाथ चक्रवर्तिपाद कृत ।
१२—चतुःश्लोकी भाष्यम् (सानुवाद) श्रीनिवासाचार्यप्रभुकृत ।
१३—श्रीकृष्णभजनामृत (सानुवाद) श्रीनरहरिसरकार ठाकुर कृत ।

१४–श्रीप्रेमसम्पुट (मूल, टीका, अनुवादसह) श्रीविश्वनाथचक्रवर्त्ती कृत ।
१५–भगवद्भक्तिसार समुच्चय (सानुवाद) श्रीलोकानन्दचार्य प्रणीत ।
१६–भगवद्भक्तिसार समुच्चय (सानुवाद बंगला) श्रीलोकानन्दचार्य प्रणीत।
१७–व्रजरीति चिन्तामणि (मूल,टीका, अनुवाद) श्रीविश्वनाथ चक्रवर्त्ती ठाकुर कृत ।
१८–श्रीगोविन्दवृन्दावनम् (सानुवाद) ।
१९–श्रीराधारस सुधानिधि (मूल बंगला) श्रीप्रबोधानन्द सरस्वतीपाद रचित ।
२०–श्रीराधारससुधानिधि (बंगला मूल, अनुवाद सह) ।
२१–श्रीराधारस सुधानिधि (मूल हिन्दी) ।
२२–श्रीराधारससुधानिधि (हिन्दी मूल, अनुवाद सह) ।
२३–श्रीकृष्णभक्तिरत्नप्रकाश (सानुवाद) श्रीराघवपण्डित रचित ।
२४–हरिभक्तिसार संग्रह (सानुवाद) श्रीपुरुषोत्तमशर्म प्रणीत ।
२५–श्रुतिस्तुति व्याख्या (अन्वय, अनुवाद) श्रीपाद प्रबोधानन्द सरस्वती कृत ।
२६–श्रीहरेकृष्ण महामन्त्र "अष्टोत्तरशतसंख्यक" ।
२७–धर्मसंग्रह (सानुवाद) श्रीवेदव्यास कृत ।
२८–श्रीचैतन्य सूक्तिसुधाकर श्रीचैतन्यचरितामृत, तथा श्रीचैतन्य भागवतीय सूक्तिया ।
२९–सनत् कुमार संहिता (सानुवाद) व्रजीय रागानुगा उपासना प्रतिपादक सुप्राचीन ग्रन्थ।
३०–श्रीनामामृत समुद्र श्रीनरहरि चक्रवर्त्ति प्रणीत श्रीमन् महाप्रभु के परिकरों का नामसंग्रह।
३१–रासप्रबन्ध (सानुवाद) श्रीपादप्रबोधानन्द सरस्वती कृत ।
३२–दिन चन्द्रिका (सानुवाद) सार्वदेशिक दिनकृत्यपद्धति ।
३३–भक्तिसर्वस्व (बंगाक्षरमें) प्रेमभक्तिचन्द्रिका, प्रार्थना प्रभृति सम्बलित ।
३४–स्वकीयात्वनिरास परकीयात्वप्रतिपादन श्रीविश्वनाथ चक्रवर्त्तीकृत ।
३५–श्रीसाधनदीपिका श्रीराधाकृष्णगोस्वामिपाद विरचिता ।
३६–मन:शिक्षा (बंगला) (अष्टोत्तरशत पदावली) ।
३७–श्रीचैतन्यचन्द्रामृतम् श्रीप्रबोधानन्दसरस्वतीपाद रचितम् ।
३८–श्रीगौरांगचन्द्रोदय: महर्षि श्रीकृष्णद्वैपायन व्यास प्रणीत ।
३९–श्रीब्रह्मसंहिता ।
४०– प्रमेयरत्नावली श्रीबलदेव विद्याभूषणकृत श्रीकृष्णदेव सार्वभौम कृत ।
४१–नवरत्न ।
४२–भक्तिचन्द्रिका श्रीलोकानन्दाचार्य प्रणीत, श्रीचैतन्यदेव की सुप्राचीन उपासना पद्धति।
४३–पदावली श्रीरायशेवर रचित, श्रीगोविन्ददास कृत–अष्टकालीय सरस प्राञ्जल पदसमूह
४४–भक्तिचन्द्रिका (बंगाक्षर) संगृहीत ग्रन्थ ।
४५–महर्षि श्रीकृष्णद्वैपायन प्रणीत–गर्गसंहितोक्त श्रीबलभद्रसहस्रनाम–स्तोत्रम् (बंगाक्षर)
४६–वेदान्तस्यमन्तक विप्रकुलशेखर श्रीराधादामोदर कृत ।
४७–तत्त्वसन्दर्भ: श्रीमज्जीवगोस्वामीपाद प्रणीत ।